International Journal of Sanskrit Research 2020; 6(5): 30-33

International Journal of Sanskrit Research

अनन्ता

**ISSN: 2394-7519**
IJSR 2020; 6(5): 30-33

www.anantaajournal.com
Received: 13-07-2020
Accepted: 18-02-2020

**डाँ. प्रदीप्त कुमार: नन्द:**
वरिष्ठाध्यापक:-श्रीदधिवामनजीउ संस्कृत महाविद्यालय:, केन्द्रापडा, ओडिशा, भारत

**Corresponding Author:**
**डाँ. प्रदीप्त कुमार: नन्द:**
वरिष्ठाध्यापक:-श्रीदधिवामनजीउ संस्कृत महाविद्यालय:, केन्द्रापडा, ओडिशा, भारत

# भक्तिप्रियो माधव:

**डाँ. प्रदीप्त कुमार:**

**प्रस्तावना-**

सर्वान्तर्यामिनोऽखिललोकाधिष्ठातुरानन्दकन्दस्य सच्चिदानन्दस्य सर्वेश्वरस्य श्रीजगन्नाथस्य हरे: सत्तामधिगन्तुं यद्यपि अजस्रपन्था: स्थिरीक्रियते विद्वद्भिस्तथापि अनपायिन्या भक्त्या भक्त: अचिरमेवानन्दघनं भगवन्तमुपलभ्य कृतकृत्यो जायते । तथाह श्रुति:-“विज्ञानघनानन्दघनासच्चिदानन्दैकरसे भक्तियोगे स तिष्ठति[१]”। इति । मोक्षसाधनोपायत्वेन प्रसिद्धानामपि योगज्ञानकर्मभक्तीनां भक्तिरेव सर्वश्रेष्ठा प्रतिपादिता । यतो हि करालेऽस्मिन् विषाणुमये संसारे जीवन्तो वयं मनुष्या: अतीव दुर्बला: । अज्ञानिन: । पामरा:। पापकर्मरता: कामिनीकांचनलुब्धा: स्म । सद्ज्ञानलाभाय समयो नास्ति । सत्कर्मणि अपि तथा। व्यक्तिगतकर्मणि सर्वे तत्परा: । केनोपायेनार्थोपार्जन: सुकरो भविष्यति इत्येवऽस्माकं लक्ष्यम् । असारे क्षणस्थायि-संसारे यद्यपि व्यक्तिगतजीवने समयाभावो दृश्यते तथापि विपदि कोपि परमेश्वरोऽस्ति योऽस्माकं सहायकत्वेन निश्चित: । यच्चोक्तं-

सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज ।

अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुच: [२]।। इत्यत्र त्वां निश्चितबुद्धिमन्तं सर्वपापेभ्यो सर्वधर्माधर्मरूपबन्धनेभ्योऽहं नूनं मोक्षयिष्यामीति अर्जुनं प्रति भगवत: सदुपदेश: स्पष्ट: । ईश्वरदर्शनहेतो: भक्तिरत्यावश्यकी । मन्दमतीनामत्यल्पशक्तीनामल्पायुषां च मनुष्याणां मनस: प्रसादाय चित्तप्रशान्तये परमानन्दप्राप्तये भक्तिरहित: कश्चन सुगमो मार्गो नास्ति । सुतरां सर्वसाधनसहजा समर्पणात्मिका भक्तिर्गरीयसी । वरीयसी । तथा हि भगवता वासुदेवेन-

मां च यो व्यभिचारेण भक्तियोगेन सेवते ।
स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते [३]।। इति । अपि च-
भक्त्या मामभिजानाति यावान् यश्चामि तत्त्वत: ।

ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् [४] ।। इति भगवदनुग्रहद्वारा एव सकलपुरुषार्थसिद्धिर्यस्मात् तस्मात् कर्मयोगो वा ध्यानयोगो वा ज्ञानयोगो वा अन्यो वा य: कश्चित् स सर्वोऽपि भक्तिद्वारेणैवार्थकरो भवेन्नान्यथा । इत्यत्र कर्मयोगध्यानयोगयो: रहस्यं भक्तियोगोक्त:। श्रीमद्भागवतं तु श्रीकृष्ण-परब्रह्मणोरभेदं मनुते । ब्रह्मसूत्रेषु प्रतिपादितं ब्रह्म, श्रीमद्भगवद्गीतायां वर्णित: पुरुषोत्तम: श्रीमद्भागवते चित्रित: श्रीकृष्णश्चेति भिन्ना: प्रतीयमाना अपि त्रयो वस्तुत: एकमेव तत्त्वमास्ते । यथोक्तं श्रीमद्भागवते-

वदन्ति तत्तत्त्वविदस्तत्त्वं यज्ज्ञानमद्वयम् ।

ब्रह्मेति परमात्मेति भगवानिति कथ्यते [५]।। इति । औपनिषदा अद्वैतवादिन: मुख्यतत्त्वं ब्रह्मरूपेण कथयन्ति, योगविशारदास्तु परमात्मशब्देन परिचिन्वन्ति, भक्तास्तु सच्चिदानन्दस्वरूपं तत्त्वं भगवानिति गायन्ति । भक्तानां मतानुसारं वासुदेव-जगन्नाथ-नारायण-श्रीकृष्ण-गोविन्दप्रभृतीनि नामानि पर्यायवाचकानि भवन्ति, नान्यथा । यद्यपि परमार्थज्ञानेन जीवभगवतोरभेदस्तथापि व्यवहारदृशा भेद एवेति निश्चप्रचम् । जीव: सेवको मायायुक्तो भगवान् सेव्यो मायानिर्मुक्त इत्यनयो: महान् भेद: । । भक्त: कदापि मुक्तिर्नेच्छति । भक्तस्य कृते मुक्तेरपेक्षया भक्तेरेव प्राधान्यमिति वैष्णवीयसिद्धान्त: । यच्चोक्तं भागवते-

सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत: ।

दीयमानं न गृह्णन्ति विना मत्सेवनं जना: [६] ।। भगवत्सेवा व्यतिरिक्तं मुक्तिमपि तुच्छां मन्यमानस्य भक्तस्य कृते नूनमेतादृशो भक्तियोग: परमपुरुषार्थो वरीवर्ति । भक्तिशब्दनिर्वचनम्- भज् सेवायामित्यस्माद्धातो स्त्रियां क्तिन् प्रत्ययेन निष्पन्नोऽयं भक्तिशब्दो भजनार्थक: सेवार्थको वा । गरुड़पुराणे-

भज इत्येष वै धातु: सेवायां परिकीर्तिता ।

तस्मात्सेवा बुधै: प्रोक्ता भक्तिसाधन-भूयसी [७]।। इत्यत्र भुक्तिमुक्तिरहिता सेवापरपर्याया भक्ति: याऽन्तरंगमानसीवृत्तिरुक्ता । पूज्यविषयकं प्रेमैव भक्तिशब्दवाच्यम् । तादृशप्रेमयुक्ता वृत्तिरेव प्रायेण भक्तिशब्दार्थ इति शिष्टप्रयोगादवगम्यते । गीतासु च तथैव प्रयोगो भक्तिशब्दस्य। उक्तं च-

यो यो यां यां तनुं भक्त: श्रद्धयार्चितुमिच्छति ।

तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् [८]।। अत्र तं तं देवताविशेषं प्रीतिपूर्वकमर्चितुमिच्छन् साधक: तत्तद्देवताभक्त इत्युक्तम् । भगवद्विषया भक्ति: प्रपत्तिरूपा । "ये यथा मां प्रपद्यन्ते"[९] इत्यत्र ये भक्ता येन प्रकारेण फलमुद्दिश्य मे शरणं गच्छन्ति तान् तथैव फलदानेनऽनुगृह्णामि ।
भक्तिलक्षणम्- भज्यते सेव्यते अनया वेति भक्ति: । सा तु परमप्रेमरूपा अमृतस्वरूपा [१०]। इति महर्षिनारद: । सा परानुरक्तिरीश्वरे [११] इति शाण्डिल्य: सा पूजादिषु अनुराग: [१२] इति पराशर: कथादिषु अनुराग: [१३] इति गर्गादय: संगिरन्ते । अपि च श्रीमधुसूदनसरस्वतिचरणा:-

द्रुतस्य भगवद्धर्मात् धारावाहिकतां गता ।

सर्वेशे मनसो वृतिर्भक्तिरित्यभिधीयते [१४]।। इति द्रवीभावपूर्विका हि मनसो भगवदाकारता सविकल्पकवृत्तिरूपा भक्तिरिति लक्षणं प्रतिपादयामासु: । श्रीचैतन्यमतानुयायिन: गौड़ीयवैष्णवा इत्थं समामनन्ति । सर्वाभिलाषं परित्यज्य पुराणपुरुषोत्तमस्य श्रीकृष्णचन्द्रस्यानुशीलनं हि ते उत्तमाभक्तिपदेन समुद्घोषयन्ति । यच्चोक्तं- हरिभक्तिरसामृतसिन्धौ –

अन्याभिलाषिता शून्यं ज्ञानकर्माद्यनावृतम् ।
आनुकूल्येन कृष्णानुशीलनं भक्तिरुत्तमा [१५]।। इति । तथाहि नारदेन-
सर्वोपाधिविनिर्मुक्तं तत्परत्वेन निर्मलम् ।

हृषीकेण हृषीकेशसेवनं भक्तिरुच्यते [१६]।। अनेन कृष्णभक्तिरुक्ता । रामानुजमते भक्ति: उपासनाशब्दवाच्या । "स्नेहपूर्वमनुध्यानं भक्तिरित्युच्यते बुधै: [१७]" पूर्णप्रज्ञोऽपि- ज्ञानस्य भक्तिभागत्वात्भक्ति: ज्ञानमितीर्यते । ज्ञानस्येव विशेषो यद् भक्तिरित्यभिधीयते [१८]।। अपि च तत्र-

भक्त्या ज्ञानं ततो भक्तिस्ततो दृष्टिस्ततश्च स: ।

ततो मुक्तिस्ततो भक्ति: सैव स्यात्सुखरूपिणी [१९]।। निर्दिष्टभक्तिशब्दव्यवहारे यद्यपि निगमो मौनस्तथापि न भक्तिप्रदर्शनेन । यतो हि नैके वैदिकमन्त्रा: स्तुतिपरका अनुनयविनयपरका: सिद्धा:। तेषु तेषु भक्तितत्वं गुप्तरूपेण सन्नद्धम् । सर्वादौ ऋग्वेदे- "भगभक्तस्य ते वयमुदशेम तवावसा। मूर्धानं राय आरभे" [२०] अत्र भक्तशब्द: विभाज्यार्थे देयभागार्थे वा दृश्यते । एवं च "सिषासन्तो द्योतना शश्वदागादग्रमग्रमिद् भजते वसूनाम्" [२१] "त्वं हि न: वसो त्वं माता शतक्रतो बभूविथ अधा ते सुम्नमीमहे" [२२] अपि चात्र- "सखा पिता पितृतम: पितृणां कर्तेमु लोकमश्नुते वयोधा:"[२३] इत्येवमिन्द्रो मित्रताया:सहृदयताया: मातृत्वस्य पितृत्वस्य भावविनिमयसूचका: अनुरागस्वरूपा व्यवहारा: भक्तिशब्देन गीयन्ते । ब्राह्मणग्रन्थेषु कर्मकाण्डस्य प्राधान्ये अपि उपासकानां हृदयेषु भक्तिभावस्य अनुरागात्मिका प्रवृत्तिरुत्तरोत्तर बर्धमानैव दृष्टिगोचरी भवति । श्वेताश्वेते स्पष्टतया –

यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।

तस्यैते कथिता ह्यर्था: प्रकाशन्ते महात्मन: [२४]।। अग्रे उपनिषत्सु प्रतिपाद्याया एव भक्तेर्विशदतया विकाशो महाभारते गीतायां श्रीभागवतादिमहापुराणेषु भक्तिसूत्रेषु वैष्णवादीनां साम्प्रदायिकग्रन्थेषु विस्तारित: । "रसो वै स: रसं लब्ध्वा ह्यानन्दी भवति" [२५] इत्यत्र रसस्वरूपाया: भक्ते: सर्वश्रेष्ठता प्रमाणिता । भक्तिरसमाध्यमेन रसराजस्य जगन्नाथस्य परमात्मानो रसानुसन्धानमेव भक्तिरिति स्वीकृता । रसराजदर्शनार्थं न पदार्थविज्ञानोचितनि:श्रेयसमपेक्षते नापि संयोगात्मकयोगस्य । न व्यक्ताव्यक्तज्ञविज्ञानं नापि वैदिकज्ञानम् । न वात्र ब्रह्माद्वैतविज्ञानस्यावश्यकता उपादेयता उक्ता अपितु केवलं भगवद्सान्निध्योपलब्धिहेतुभूताया: भक्तेरावश्यकता स्थिरीकृता । भक्तिदर्शनोचितमार्गेण अपवर्गद्वारमुद्घाट्य परमपदं प्राप्नोन्ति भक्तप्रवरा: । तथाह भगवान् श्रीकृष्ण:-

भक्त्या मामभिजानाति यावान् यश्चामि तत्वत: ।
ततो मां तत्वतो ज्ञात्वा विशते तदनन्तरम् [२६]।। भागवतेऽपि-
न युज्यमानया भक्त्या भगवत्यखिलात्मनि ।
शदृशोऽस्ति शिव: पन्था योगिनां ब्रह्मसिद्धये [२७]।। अपि च तत्र-
स वै पुंसा परो धर्मो यतो भक्तिरधोक्षजे ।
अहैतुवयप्रतिहता यथात्मा सुप्रसीदति [२८] ।। भागवतेऽपि-
यथा समस्तलोकानां जीवनं सलिलं स्मृतम् ।

तथा समस्तसिद्धीनां जीवनं भक्तिरुच्यते ।। भगवता श्रीकृष्णेन स्पष्टं प्रतिपादितं यत् अहं चतुर्भिर्वेदै:, उग्रेण तपसा, यज्ञेन, येन केनापि माध्यमेन वा नाधिगन्तुं शक्य: । केवलमनन्यया भक्त्या मम साक्षात्कारो भवितुमर्हति नान्यथा । भगवता कपिलेनापि स्वमातरं देवहुतिं प्रति अस्या: सर्वश्रेष्ठत्वमपि प्रमाणितम् ।
भक्तिलाभोपाय:-भक्तिलाभार्थं नाचरणस्य प्राधान्यं न विद्याया आवश्यकता न पौरुषस्यापेक्षा वर्तते अपितु विशुद्धप्रेम एवापेक्षते भगवान् । यच्चोक्तं जीवगोस्वामिना-

व्याधस्याचरणं ध्रुवस्य च वयो विद्या गजेन्द्रस्य का
का जातिर्विदुरस्य यादवपतेरुग्रस्य किं पौरुषम् ।
कुब्जाया कमनीयरूपमधिकं किं तत् सुदाम्नो धनं

भक्त्या तुष्यति केवलं न च गुणैर्भक्तिप्रियो माधव: [२८]।। इति व्यावहारिकजीवने पुत्रादीन् प्रति यथा पितु: प्रीतिर्जायते तथैव चित्तशुद्धि-साधुसंग-नामसंकीर्तनप्रभृतिभिर्जन्मान्तरीयसंस्कारवशेभ्य: पुरुषार्थसाध्या हरिचिह्नसमाश्रया भागवती भक्ति: समुदेति । सा सर्वेषां तत्त्वदर्शिज्ञानिनां कर्मासक्तानामज्ञानानां प्रवृत्तिमार्गानुयायिनां गृहस्थानां निवृत्तिमार्गाश्रयिणां संन्यासिनां एवं च सर्वविधसाधकवर्गाणां च कृते साधनमार्गस्य सफलतावाप्तये समानरूपेणावश्यं समाश्रयणीया समादरणीया सुखदा शुभदा च वर्तते ।
भक्तेरधिकारिण:- सत्संगादिभि: संस्कारविशेषै: भगवदाराधनार्थं यस्य श्रद्धा समुत्पन्ना अपि य: सर्वेषु व्यावहारिककर्मसु अनासक्तोऽनिर्विण्णश्च तिष्ठति स एव भक्तपदवाच्य इति भगवान् वादरायण: । यस्य ज्ञानं नास्ति वैराग्यो नास्ति संसारासक्तिर्नास्ति अपि तु भगवद्प्रसंगे कापि श्रद्धा जायते स भक्तेरधिकारी इति । सुकृतिशालिन: पुण्यकर्मिणो जना: स्व-स्वपूर्वसंस्कारवशात् ज्ञानस्य तारतम्येन भगवन्तं भजन्ते । यच्चोक्तं भगवता-

चतुर्विधा भजन्ते मां जना: सुकृतिनोऽर्जुन: ।

आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ: [२९] ।। अत्र सात्विक-राजस-तामसभेदेन भक्तस्य त्रिविधो भेद: प्रदर्शित: । एतेषु सात्विका: ज्ञाननिष्ठपरायणा भक्ता एव श्रेष्ठा । ते उत्तमां पराभक्तिं लभन्ते । ननु आर्तादयो न प्रियास्तेषां फलाकांक्षादर्शनाच्चेन्न । भगवत: प्रियाप्रियविरहात् । न हि भक्तिभावव्यावृतमपि भगवत्तत्त्वज्ञानम्, ज्ञानत्वव्यावृत्या वा भक्तिर्मनसा चिन्तयितुमपि शक्यते । न हि- "तदेतत् प्रेय: पुत्रात् प्रेयो वित्तात् प्रेयोऽन्यस्मात् सर्वस्मादन्यतरं यदयमात्मा [३०] " इति श्रुते: सर्वान्तरे स्वात्मनि ज्ञानं जातम्, भक्तिस्तु न प्रादुर्भूता इति कथञ्चिदपि शक्यं कल्पयितुम् । न च सर्वान्तरे परमात्मनि निरतिशयप्रीति: समस्ति तज्ज्ञानं विनैव ।

भक्तेर्माहात्म्यम्- सर्वतन्त्रस्वतन्त्रभक्ते: माहात्म्यं सर्वजनविदितम् । वैदिककर्मसु व्रत-तपस्यादिषु ज्ञानयोगादिपारमार्थिकसाधनेषु च यथा सर्वेषां मनुष्याणां न समाधिकार: तथा न भगवद्भक्तौ । अस्यामेव भक्तौ न वर्णाश्रमस्य विचार:, न कस्यापि जातेर्नापि जीवजन्तुष्वपि कोऽपि विधिनिषेध: श्रूयते । गजगृध्रवानरादीनां भक्तावप्यधिकारश्रवणात् । यदि कश्चित् कुत्सिताचारो भगवन्तं सेवते तर्हि स साधुरेव मन्तव्य: । यदुक्तं भगवता-

अपि चेत् सुदुराचार: भजते मामनन्यभाक् ।
साधुरेव स मन्तव्य: सम्यग् व्यवसितो हि स: ।।
मां हि पार्थ व्यपाश्रित्य येऽपि स्यु: पापयोनय: ।
स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ।। (गी-९/३०-३२) अपि च-
आत्मारामाश्च मुनयो निर्ग्न्था अप्युरुक्रमे ।

कुर्वन्त्यहैतुकीं भक्तिमित्थंभूतगुणो हरि: [३१] इत्यत्र अव्यभिचारिणं भक्तियोगं विना मनस: सम्यक्प्रसादाभाव: परिलक्षित: । सुतरां –

सर्वदा सर्वकार्येषु नास्ति तेषाममंगलम् ।
येषां हृदिस्थो भगवान् मंगलायतनो हरि: ।। इति स्मृते: भगवति वासुदेवे भक्तियोग: श्रेष्ठ इति प्रमाणित: ।

भक्तेर्भेद:- भक्तिस्तावद् द्विविधा । गौणी परा भेदात् । गौणी पुन: द्विधा । वैधी रागात्मिका च । वैधी अपि पुन: श्रवणादिभेदेन नवधा । रागात्मिका च हास्यादिरसभेदेन चतुर्दशधा विभज्यते । तथा च वैधी-रागात्मिका-पराभेदात् भवति भक्तिस्त्रिविधा । पूर्वं वैधी ततो रागात्मिका तदनन्तरं च परा भक्तिर्जायते । साधनदशायां गौणी एव सिद्धावस्थायां परा निगद्यते । गौड़ीये च दर्शने सा भक्ति: साधनभक्तिर्भावभक्ति: प्रेमाभक्तिरिति त्रिविधा । आदौ साधनभक्तिर्निरूप्यते।

कृतिसाध्या भवेत् साध्यभावा सा साधनाभिधा ।

नित्य सिद्धस्य भावस्य प्राकट्यं हृदि साध्यता ।। (भ०र०सि०-१/२/२) इयं साधनभक्ति: श्रवणादिभेदेन नवधा भिद्यते । यदुक्तं-

श्रवणं कीर्तनं विष्णो: स्मरणं पादसेवनम् ।
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ।।
इति पुंसर्पिता विष्णौ भक्तिश्चेन्नवलक्षणा ।

क्रियते भगवत्यद्धा तन्मन्येऽधीतमुत्तमम् [३२]।। इत्यत्र भगवद्लीलारसास्वाद:, गुणानुकीर्तनं नामस्मरणं, पादारविन्दसेवनं, अर्चनं, वन्दनं, दास्यं, सख्यं, आत्मनिवेदनमिति नवधा भिद्यते ।

भक्तिरससमीक्षा- यद्यपि भरतमुनिना नाट्यशास्त्रे नवरसा: स्वीकृतास्तत्र भक्तिसंप्रदाये शान्त-प्रीत-प्रेयान्-वात्सल्य-मधुरभेदात् पंचमुख्या: । हास्य-अद्भुत-वीर-करुण-रौद्र-भयानक-वीभत्सभेदात् सप्त च गौणा: इति गौणमुख्यभेदात् द्वादशभक्तिरसा: स्वीक्रियन्ते। भक्ते: सप्त गौणरसा: साहित्ये तथैव स्वतन्त्रतया स्वीकृता: । शिष्टौ द्वौ शान्तशृंगाररसौ भक्तिशास्त्रे शान्तमधुरभक्तिभेदे अन्तर्भुक्तौ । भक्तिरसे भावस्याश्रयो भक्त एव भवति । न नाट्यगतपात्रं यथा लौकिके रसे जायते। भक्तिशास्त्रे श्रीकृष्णविषयकरतिरेव स्थायिभाव: स्वीकृत: [३३] । सा द्विविधा मुख्यरति-गौणरतिश्च । विस्तरभयात् विरम्यतेऽत्र । हरितोषणकरी भगवद्भक्ति: सर्वश्रेष्ठा । जीवस्य कृते परमसहायिका । यदुक्तं मध्वाचार्यै:-

श्रीमन्मध्वमते हरि: परतम: सत्यं जगत्तत्वतो
भेदो जीवगणा: हरेरनुचरा नीचोच्चभावं गता: ।
मुक्तिर्नैजसुखानुभूतिरमला भक्तिश्च तत्साधनं

अक्षादित्रितयं प्रमाणमखिलाम्नायैकवेद्यो हरि: [३४]।। इत्यत्र भक्तो यदा निष्कामकामनया आत्मानं श्रीभगवत्पदारविन्दे समर्पयति तदासौ भगवत्प्रसादं प्राप्य कृतकृत्यो जायते । तथा चोकतं श्रीचैतन्यमहाप्रभुणा शिक्षाष्टके-

न धनं न जनं न सुन्दरीं कवितां वा जगदीश कामये ।

मम जन्मनि जन्मनीश्वरे भवताद् भक्तिरहैतुकी त्वयि ।। इत्यादि दृष्टान्तै: भगवत्प्राप्त्यर्थं भक्तिरेव परमं चरमं च साधनमित्यलं पल्लवितेन ।

**संधर्व सूची**

| **पादटीप्पण्य:** | **सहायकग्रन्था:** |
|---|---|
| १. गोपालोत्तरतापिनी | भक्तिरसामृतसिन्धु: |
| २. भ०गी०- १८/६६ | भक्तिरत्नावलि: |
| ३. भ०गी-१४/२६ | भागवतपत्रिका |
| ४. भ०गी-१८/५५ | भक्तितत्त्वविवेक: |
| ५. भा०ग०-१/२/११ | ब्रह्मसूत्रमाध्वभाष्यम् |
| ६. भाग०-३/२९/२३ | ब्रह्मसूत्रं अणुभाष्यम् |
| ७. भा०दर्शने- | चमत्कारचन्द्रिका |
| ८. भ०गी०-७/२१ | गोविन्दभाष्यम् |
| ९. भ०गी-४/११ | हरिभक्तिरसामृतसिन्धु: |
| १०. ना०भ०सू०-१६ | नारदभक्तिसूत्रम् |
| ११. शा०भ०सू०-१ | शाण्डिल्यभक्तिसूत्रम् |
| १२. ना०भ०सू-१६ | प्रमेयरत्नावलि: |
| १३. ना०भ०सू०-१७ | षट्सन्दर्भ: |
| १४. भक्तिरसायने | ब्रह्मसूत्रं श्रीभाष्यम् |
| १५. भ०र०सि०पू०वि०-१/११६ | उज्वलनीलमणि: |
| १६. भ०र०सि०-१/१० | श्रीमद्भागवतम् |
| १७. गी०रा०भा०-सप्तमाध्याये | श्रीमद्भगवद्गीता |
| १८. मध्व०अणु-२० | ईशादिदशोपनिषत् |
| १९. राघवेन्द्रतीर्थ: भावदीपे | नारदपञ्चरात्रम् |
| २०. ऋ०वे०-१/२४/५ | भागवतदर्शनम् |
| २१. ऋ०-१/१२३/४ | भक्तिदर्शनविमर्श: |
| २२. ऋ०-८/९८/११ | भक्तिरसायनम् |
| २३. ऋ०-४/१७/११७ | भक्तिचन्द्रिका |
| २४. श्वे०उ०-६/२२ | उपदेशामृतम् |
| २५. तै०उ०-२/७/२ | सर्वदर्शनसंग्रह: |
| २६. गी०-१८/५५ | वेदान्तपारिजात: |

| | |
|---|---|
| २७. भाग०-३/२५/२९ | विष्णुपुराणम् |
| २८. भाग०-१/२/६ | महाभारतम् |
| २९. ह०भ०र०सि०-२/५ | चैतन्यचरितामृतम् |
| ३०. गी०-७/१६ | गोपालोत्तरतापिनी |
| ३१. बृ०उ०-१/४/८ | भक्तिरत्नावलि: |
| ३२. भाग०-१/७१० | भारद्वाजसंहिता |
| ३३. तत्र-७/५/२३-२४ | भारतीयदर्शनम् |
| ३४. भ०र०सिन्धु: | सिद्धान्तरत्नम् |
| ३५. प्रमेयररत्नावल्याम् | दर्शनशास्त्रस्य तिहास: |